लघु-ग्रन्थमाला

[५८]

श्रीहरिरायविरचिता

# तर्कचन्द्रिका

(न्यायदर्शनस्य प्रकरणग्रन्थः)

सम्पादकः

डॉ. हरेरामत्रिपाठी




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

LAGHU-GRANTHAMĀLĀ

[ Vol. 58 ]

१४१

# TARKACANDRIKĀ

OF

## ŚRĪ HARIRĀYA

परमादरणीय श्रद्धेय गुरु जी
कमलचरणों में
को, सादर समर्पित
हरेराम त्रिपाठी
८।८।२००१

*EDITED BY*

**DR. HARERĀMA TRIPĀṬHĪ**

Lecturer, Sarvadarśana-Department

Śrī Raṇavīra Kendrīya Sanskrit Vidyāpīṭha

Jammu




VARANASI

2001

ISBN : 81-7270-044-X

*Research Publication Supervisor—*
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.



*Published by—*
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



**First Edition, 500 Copies**
**Price : Rs. 10.00**





*Printed by—*
**Shreejee Computer Printers**
Nati Imli, Varanasi-221 001

लघु-ग्रन्थमाला
[५८]

श्रीहरिरायविरचिता

# तर्कचन्द्रिका

(न्यायदर्शनस्य प्रकरणग्रन्थः)

सम्पादकः
डॉ. हरेरामत्रिपाठी
प्राध्यापकः
सर्वदर्शनविभागे (न्यायस्य)
जम्बूस्थ-श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठस्य




वाराणस्याम्
२०५७ तमे वैक्रमाब्दे १९२२ तमे शकाब्दे २००१ तमे खैस्ताब्दे

ISBN : 81-7270-044-X

*Research Publication Supervisor*—
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.



*Published by*—
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at*—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.





**First Edition, 500 Copies**

**Price** : Rs. 10.00



*Printed by*—
**Shreejee Computer Printers**
Nati Imli, Varanasi-221 001

लघु-ग्रन्थमाला

[५८]

श्रीहरिरायविरचिता

# तर्कचन्द्रिका

(न्यायदर्शनस्य प्रकरणग्रन्थः)

सम्पादकः

डॉ. हरेरामत्रिपाठी

प्राध्यापकः

सर्वदर्शनविभागे (न्यायस्य)

जम्बूस्थ-श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठस्य



वाराणस्याम्

२०५७ तमे वैक्रमाब्दे   १९२२ तमे शकाब्दे   २००१ तमे खैस्ताब्दे

ISBN : 81-7270-044-X

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः —*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

□

*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
***निदेशकः, प्रकाशनसंस्थानस्य***
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी-२२१००२

□

*प्राप्ति-स्थानम् —*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१००२

□

**प्रथमं संस्करणम्** – ५०० प्रतिरूपाणि
**मूल्यम्** – १०.०० रूप्यकाणि

□

*मुद्रकः —*
**श्रीजी कम्प्यूटर प्रिण्टर्स**
नाटी इमली, वाराणसी-२२१००१

# भूमिका

न्यायशास्त्रस्यादिमो ग्रन्थो न्यायसूत्रमस्ति। तस्य प्रणेता गौतममुनिर्विद्यते। न्यायशास्त्रस्य विभाग द्विविध इत्यवलोक्यते। प्रमेयप्रधानः प्रमाणप्रधानश्चेति। येषु ग्रन्थेषु प्रमेयविचाराणां प्राधान्यं भवति ते प्रमेयप्रधानाः सन्ति। यथा—न्यायसूत्रं, वात्स्यायनभाष्यं, न्यायवार्तिकतात्पर्यटीका, न्यायवार्तिकतात्पर्यपरिशुद्ध्यादयो ग्रन्थाः सन्ति। येषु ग्रन्थेषु प्रमाणविचाराणां प्राधान्यं भवति ते प्रमाणप्रधानाः। यथा—तत्त्वचिन्तामणिः, तत्त्वचिन्तामणिदीधितिः, तत्त्वचिन्तामणिदीधितिगादाधरी, जागदीशी चेत्यादय इति। न्यायदर्शने चतुर्विधः प्रकरणग्रन्थ उपलभ्यते—

**प्रथमः प्रकरणग्रन्थः**

अत्र प्रमाणपदार्थानां निरूपणमस्ति। न्यायदर्शनस्वीकृतप्रमाणातिरिक्त-पञ्चदशपदार्थानामन्तर्भावः प्रमाणेष्वेव विद्यते। यथा—भासर्वज्ञस्य 'न्यायसारः' इति।

**द्वितीयः प्रकरणग्रन्थः**

अत्र षोडशपदार्थानामुद्देशलक्षणपरीक्षाः सन्ति। तत्र षोडशपदार्थेष्वेव वैशेषिकदर्शनस्वीकृतसप्तपदार्थानामन्तर्भावो विद्यते। एते ग्रन्था निम्नोक्ताः सन्ति—

| लेखकाः | ग्रन्थाः |
|---|---|
| १. श्रीवरदराजाचार्यः | 'तार्किकरक्षा' (११५०ई.) |
| २. केशवमिश्रः | 'तर्कभाषा' (१२७५ई.) |
| ३. हरिरायः | 'तर्कचन्द्रिका' |

**तृतीयः प्रकरणग्रन्थः**

अत्र वैशेषिकदर्शनस्य पदार्थानां निर्वचनं विद्यते। यथा—

| क्र.सं. | लेखकाः | ग्रन्थाः |
|---|---|---|
| १. | उदयनाचार्यः | 'लक्षणावली' |
| २. | वल्लभाचार्यः | 'न्यायलीलावती' |
| ३. | अन्नम्भट्टः | 'तर्कसङ्ग्रहः' |

| | | |
|---|---|---|
| ४. | विश्वनाथन्यायपञ्चाननः | 'न्यायसिद्धान्तमुक्तावली' |
| ५. | लौङ्गाक्षिभास्करः | 'तर्ककौमुदी' |
| ६. | जगदीशभट्टाचार्यः | 'तर्कामृतम्' |

**चतुर्थः प्रकरणग्रन्थः**

अत्र न्यायवैशेषिकयोः केषाञ्चित् पदार्थानां निरूपणं विद्यते।

| **लेखकाः** | **ग्रन्थाः** |
|---|---|
| १. शशधरः | 'न्यायसिद्धान्तदीपः' |
| २. माधवाचार्यः | 'सर्वदर्शनसङ्ग्रहः' |

प्रकरणस्य लक्षणमित्थं विद्यते—

शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।
आह प्रकरणं नाम ग्रन्थभेदविपश्चितः ।। इति।

हरिरायकृता 'तर्कचन्द्रिका' न्यायदर्शनस्य प्रकरणग्रन्थो विद्यते। यथा केशवमिश्रकृततर्कभाषायां षोडशपदार्थानां विवेचनं वैशेषिकपदार्थानां षोडशपदार्थेष्वेवान्तर्भावश्च विद्यते, तथैव तर्कचन्द्रिकायामपि विद्यते।

**तर्कचन्द्रिका-तर्कभाषयोः कुत्रचिद् वाक्यसाम्यम्**

| तर्कचन्द्रिका | तर्कभाषा |
|---|---|
| १. तर्काः प्रमाणादिषोडशपदार्थाः। तथा च सूत्रम्—प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्प-वितण्डाहेत्वाभासछलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति न्यायस्य प्रथमं सूत्रम्। | १. प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्प-वितण्डाहेत्वाभासच्छलजातिनिग्रह-स्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति न्यायस्यादिमं सूत्रम्। |
| २. लक्षणं त्वसाधारणधर्मप्रतिपादकं पदम्। | २. लक्षणं त्वसाधारणधर्मवचनम्। |
| ३. अत्र प्रथमोद्दिष्टस्य प्रमाणस्य साम्प्रतं लक्षणमुच्यते। प्रमाकरणं प्रमाणम्। | ३. तत्रापि प्रथममुद्दिष्टस्य प्रमाणस्य तावल्लक्षणमुच्यते। प्रमाकरणं प्रमाणम्। |
| ४. तच्च कारणं त्रिविधं समवाय्यसम-वायिनिमित्तभेदात्। तत्र यत्समवेतं कार्य-मुत्पद्यते तत्समवायिकारणम्। यथा तन्तवः पटस्य समवायिकारणम्। | ४. तच्च कारणं त्रिविधम्। समवाय्यसम-वायिनिमित्तभेदात्। तत्र यत्समवेतकार्य-मुत्पद्यते तत्समवायिकारणम्। यथा तन्तवः पटस्य समवायिकारणम्। |

५. तच्चानुमानं द्विविधम्। स्वार्थं परार्थञ्चेति। स्वप्रतिपत्तिजनकं स्वार्थं, परप्रतिपत्तिजनकं परार्थम्।

६. नन्वर्थापत्तिरपि पृथक् प्रमाणान्तरमस्तीति चेत्, तथा हि पीनो देवदत्तो दिवा न भुङ्क्त इति दृष्टे श्रुते वा दिवा भुञ्जानस्य पीनत्वं रात्रिभोजनमन्तरेणानुपपन्नमित्यर्थाक्षिप्तं रात्रिभोजनं कल्प्यत इति चेन्न।

७. तथाप्यभावग्रहणार्थमनुपलब्धिरूपमभावाख्यं पृथक् प्रमाणान्तरं स्वीकार्यमिति चेत्।

८. अथ प्रमेयाण्युच्यन्ते।

९. तत्रात्मत्वसामान्यवानात्मा। स च नित्यो विभुश्च बुद्ध्यादिगुणलिङ्गादनुमेयः।

१०. भोगायतनमन्त्यावयविशरीरम्। यदवच्छेदेनात्मनि भोगो जायते तद् भोगायतनम्। भोगस्तु सुखदुःखसाक्षात्कारः। द्रव्यानारम्भकं कार्यं द्रव्यमन्त्यावयवि चेष्टाश्रयो वा शरीरम्। चेष्टा तु हिताहितप्राप्तिपरिहारार्था क्रियेति।

११. शरीरसंयुक्तं ज्ञानकारणमतीन्द्रियमिन्द्रियम्।

१२. तत्र पृथिवीत्वसामान्यवती पृथिवी।

१३. तेजस्त्वसामान्यवत्तेजः।

५. तच्चानुमानं द्विविधम्। स्वार्थं परार्थञ्चेति। स्वार्थं स्वप्रतिपत्तिहेतुः।

६. नन्वर्थापत्तिरपि पृथक् प्रमाणान्तरमस्ति। अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्तरकल्पनमर्थापत्तिः। तथा हि पीनो देवदत्तो दिवा न भुङ्क्त इति दृष्टे श्रुते वा रात्रिभोजनं कल्प्यते।

७. नन्वभावाख्यमपि पृथक् प्रमाणमस्ति तच्चाभावग्रहणायाङ्गीकरणीयम्।

८. प्रमाणान्युक्तानि। अथ प्रमेयाण्युच्यन्ते।

९. तत्रात्मत्वसामान्यवानात्मा। स च देहेन्द्रियादिव्यतिरिक्तः, प्रतिशरीरभिन्नो नित्यो विभुश्च। स च मानसप्रत्यक्षः। विप्रतिपत्तौ तु बुद्ध्यादिगुणलिङ्गकः।

१०. तस्य भोगायतनमन्त्यावयविशरीरम्। सुखदुःखान्यतरसाक्षात्कारो भोगः। स च यदवच्छिन्न आत्मनि जायते तद्भोगायतनम्, तदेव शरीरम्। चेष्टाश्रयो वा शरीरम्। चेष्टा तु हिताहितप्राप्तिपरिहारार्था क्रिया, न तु स्पन्दनमात्रम्।

११. शरीरसंयुक्तं ज्ञानकारणमतीन्द्रियमिन्द्रियम्।

१२. तत्र पृथिवीत्वसामान्यवती पृथिवी।

१३. तेजस्त्वसामान्यवत्तेजः।

**ग्रन्थकारस्य परिचयः**

तर्कचन्द्रिकाख्यस्य प्रकरणग्रन्थस्य प्रणेतुर्हरिरायस्य विवरणं न कुत्रापि प्राप्यते, तथापि तर्कचन्द्रिकाया मङ्गलाचरणेन प्रतीयते यदस्य लेखकः पण्ड्यागोपालस्य पुत्रोऽस्ति। यथोक्तम्—

हाटकेशं सिद्धनाथं प्रणिपत्य गुरुं तथा।

पण्ड्यागोपालपुत्रेण क्रियते 'तर्कचन्द्रिका' ।।इति।

तर्कचन्द्रिकाख्यस्य प्रकरणग्रन्थस्य लेखको हरिरायो विद्यते। हरिरायस्तैजसपायसगोत्रोत्पन्नो विद्यते। अस्य पिता पण्ड्यागोपालः, ज्येष्ठभ्राता श्रीमान् पण्ड्याभगवतीदासः, कनिष्ठभ्राता श्रीपतिश्च विद्यत इति तर्कचन्द्रिकाया अन्तिमश्लोकेन ज्ञायते। तथा हि—

हरिरायेण पण्डितेन निर्मिता तर्कचन्द्रिका ।।इति।

श्रीमद्गोपालजीपुत्रेण श्रीमत्पण्ड्याभगवतीदासकनिष्ठेन श्रीपण्ड्याश्रीपतेर्ज्येष्ठेन हरिरायेण विरचिता तर्कचन्द्रिका ।। इति।

**कालः**

पण्ड्याहरिरायस्य कालविषये प्रामाणिकं तथ्यं न किञ्चिदवाप्यते, तथापि तर्कचन्द्रिकाख्यस्य प्रकरणग्रन्थस्यान्ते इत्थं लिखितमस्ति—

"वेदबाणमुनीन्द्वब्दे शुक्लभाद्रस्य सप्तमी।

अस्यां हरिरायेण निर्मिता तर्कचन्द्रिका" ।। इति।

तथा च हरिरायकृततर्कचन्द्रिकाया निर्माणकालः १७५४ संवत्सरस्य भाद्रपदमासस्य शुक्लपक्षस्य सप्तमी तिथिर्विद्यते। तर्कभाषायाः प्रणेतुः केशवमिश्रस्य स्थितिकालस्त्रयोदशशताब्दी विद्यते। तथा हि हरिरायः केशवमिश्रस्य परवर्ती विद्यते। हरिरायस्य स्थितिकालः सप्तदशशताब्दी विद्यत इति।

**कृतज्ञताज्ञापनम्**

परमश्रद्धेयानामाचार्यप्रवराणां **श्रीविद्यानिवासमिश्रमहोदयानां** पादपद्मयोर्भूयो भूयः सश्रद्धं प्रणतिं समर्पयामो येऽस्मान् नितरां स्निह्यन्ति। तत्कृपयैव चेदं कार्यं सम्पादितम्। परमश्रद्धेयानामाचार्यप्रवराणां **श्रीवशिष्ठत्रिपाठिमहोदयानां** चरणकमलयोर्भूयो भूयः सश्रद्धं प्रणतिं समर्पयामो येऽस्मान् नितरां स्निह्यन्ति। तत्कृपयैव सत्प्रेरणया चेदं कार्यं सम्पादितं मया।

अस्य हस्तलेखस्य मूलस्य छायाप्रतिः सरस्वतीभवनपुस्तकालयतः प्राप्ता। एतदर्थं तद्विश्वविद्यालयस्य कुलपतयः, अधिकारिणः, पुस्तकाध्यक्षाश्च धन्यवादार्हाः सन्ति। **डॉ. केशवप्रपन्नशर्माणः**, **डॉ. ललितकुमारत्रिपाठिनः**, **डॉ. वैद्यनाथझाश्च** धन्यवादार्हाः। अतः परं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याङ्गीभूतस्य प्रकाशन-संस्थानस्य निदेशकानां **डॉ. हरिश्चन्द्रमणित्रिपाठि-महोदयानां** सत्प्रेरणया कार्यमेतत् पूर्णतामगात्। अतस्तान् प्रति कार्तज्ञ्यं शिरसा वहामि। सहायकसम्पादकैः **डॉ० ददनोपाध्यायैः** अन्यैश्च संस्थाने कार्यरतैः कर्मचारिभिश्चापि सततपरामर्शपूर्वकं मुद्रणसौविध्यं सम्पादितमतस्तान्प्रति हृदयेन कृतज्ञतां वितरामि। **श्रीकृष्णमुरारीत्रिपाठिनो** धन्यवादार्हाः, अन्ये मुद्रकाश्च धन्यवादार्हाः, यैरस्य ग्रन्थस्य मुद्रणं शीघ्रमेव कृतम्। प्रकृतग्रन्थस्य सम्पादनं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवनपुस्तकालयतः प्राप्तां पाण्डुलिपिमाश्रित्य कृतम्। ग्रन्थस्यास्य अन्यापि पाण्डुलिपिः, वा द्वितीया 'ख' इति पाण्डुलिपिरपि सरस्वतीभवनपुस्तकालयतः प्राप्ता। अस्य ग्रन्थस्य सम्पादने यथामति पाठनिर्धारणार्थं कश्चन प्रयत्नो व्यधायि, तथाप्यत्र यदि क्वचन त्रुटयः स्युस्तर्हि क्षमां याचे। अन्ते च हनुमन्तं प्रणम्य विरमामि।

विदुषां वशंवदः

**हरेरामत्रिपाठी**

प्राध्यापकः, सर्वदर्शनविभागे (न्यायस्य)

जम्बूस्थ-श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठस्य

# विषयानुक्रमणी

# श्रीहरिरायविरचिता

# तर्कचन्द्रिका

हाटकेशं सिद्धनाथं प्रणिपत्य गुरुं तथा।
पण्ड्यागोपालपुत्रेण क्रियते तर्कचन्द्रिका ।।

तर्काः प्रमाणादिषोडशपदार्थाः। तथा च सूत्रं प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति न्यायस्य प्रथमं सूत्रम्। तत्र प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानमुद्देशलक्षणपरीक्षाजन्यम्। तत्रोद्देशस्तु अभिधानादेव पदार्थकथनमुद्देशः। कथनमुद्देश इत्युक्ते काकरवेऽतिव्याप्तिरतः पदार्थेत्युक्तम्। पदार्थकथनमुद्देश इत्युक्ते तु गङ्गायां घोष इत्यत्र लक्षणावाक्येऽतिव्याप्तिरतोऽभिधानादिति अभिधानात्पदार्थकथनमित्युक्ते तु प्रमाकरणं प्रमाणमिति लक्षणवाक्येऽतिव्याप्तिरत एवकार इति।

अत्रोद्देशस्तु प्रथमसूत्रेण[1] प्रमाणादिषोडशपदार्थानां कृतः। अत्रालक्ष्ये लक्षणगमनमतिव्याप्तिः। लक्षणं त्वसाधारणधर्मप्रतिपादकं पदम्, यथा—गोः सास्नाशृङ्गवत्त्वम्। परीक्षालक्षणं चाग्रे वक्ष्यते। अत्र प्रथमोद्दिष्टस्य प्रमाणस्य साम्प्रतं लक्षणमुच्यते। प्रमाकरणं प्रमाणम्। करणं प्रमाणमित्युक्ते छिदाकरणे कुठारेऽतिव्याप्ति स्तद्वारणाय मापदम्। माकरणमित्युक्ते दुष्टेन्द्रियेऽतिव्याप्तिः। दुष्टेन्द्रियस्य भ्रमरूपमाकरणत्वात्तद्वारणाय प्रपदम्। तथा च प्रमाकरणं प्रमाणमिति लक्षणं सिद्धम्। प्रमा च यथार्थानुभवः। याथार्थ्यं तु तद्वति तत्प्रकारकत्वम्, भवति हि रजते इदं रजतमिति ज्ञानं रजतत्ववति रजतत्वप्रकारकमिति यथार्थम्। शुक्ताविदं रजतमिति ज्ञानं तु रजतत्वाभाववति रजतत्वावगाहित्वान्न यथार्थम्। अनुभवपदं स्मृतिवारणाय। अत्रानुभवत्वं स्मृतिभिन्नज्ञानत्वमित्युक्तत्वात्। ननु स्मृतेरपि यथार्थत्वात् प्रमात्वमस्त्विति किमर्थं तद्वारणमिति चेत्, न, स्मृतेः साक्षात्कारादिप्रमाविलक्षणत्वात्तत् करणमपि विलक्षणं पञ्चमं प्रमाणं स्यादिति प्रमालक्षणेऽनुभवपदं देयमिति सङ्क्षेपः। किं करणमिति चेत्, अत्रोच्यते—व्यापारवदसाधारणं कारणं करणम्। अत्र तज्जन्यत्वे सति तज्जन्यजनकोऽवान्तरव्यापारः। भवति हि चक्षुर्घटसंयोगश्चक्षुर्जन्यः, चक्षुर्जन्यघटज्ञानजनकश्चेति चक्षुर्घटसंयोगोऽवान्तरव्यापार[2] इति। एवमन्यत्रापि व्यापारलक्षणं संयोजनीयम्। ईश्वरज्ञानवारणायासाधारणेति। अत्र कारणत्वमनन्यथासिद्धनियतपूर्ववर्तित्वम्। तथा हि घटादिकं प्रति दण्डादिकमनन्यथासिद्ध-

---

१. ख. प्रथमसूत्रे; २. ख. संयोगो व्यापार इति।

नियतपूर्ववर्तीति तद्दण्डादिकं घटादिकं प्रति कारणम्। यद्यपि दण्डत्वं दण्डरूपादिकं घटं प्रति नियतसर्ववर्ति भवत्येव, तथापि तन्न कारणं दण्डत्वादीनामन्यथासिद्धत्वात्। अन्यथासिद्धत्वं त्ववश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवति[१] सति तत् सहचरितत्वम्। भवति हि घटं प्रति दण्डादिकमवश्यक्लृप्तनियतपूर्ववर्तित[२] एव घटादिकार्ये सम्भवति सति तत्सहचरितदण्डत्वदण्डरूपगगनकुलालपितारासभादेरन्यथासिद्धत्वमिति। तच्च कारणं त्रिविधं समवाय्यसमवायिनिमित्तभेदात्। तत्र यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणं यथा तन्तवः पटस्य समवायिकारणम्। समवायिकारणसमवेतत्वे सति यत्कारणं तदसमवायिकारणम्। यथा तन्तुसंयोगः पटस्यासमवायिकारणं, तन्तुरूपं तु पटरूपस्यासमवायिकारणम्।

ननु तन्तुरूपं पटगतरूपस्य कथमसमवायिकारणम्, तस्य पटरूपसमवायिकारणपटे समवेतत्वाभावादिति चेत्, अत्रोच्यते—समवायिकारणत्वं द्विविधम्, एकं कार्यैकार्थसमवेतत्वमपरं कारणैकार्थसमवेतत्वम्। तत्र कार्यैकार्थसमवेतत्वं यथा पटस्य तन्तुसंयोगोऽसमवायिकारणम्, तस्य पटसमवायिकारणे तन्तौ समवेतत्वात् पटं प्रति कारणत्वाच्च। कारणैकार्थसमवेतत्वं तु पटरूपकारणपटसमवायवति तन्तौ तन्तुरूपस्य समवेतत्वादिति पटरूपं प्रति कारणत्वाच्च। समवायिकारणासमवायिकारणभिन्नत्वे सति यत्कारणं तन्निमित्तकारणम्। यथा तुरीवेमादिकं पटस्येति सङ्क्षेपः।

## अथ प्रमाणनिरूपणम्

तच्च प्रमाणं चतुर्विधम्, प्रत्यक्षानुमानोपमानशब्दभेदात्। तथा च न्यायसूत्रम्—प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति। तत्र साक्षात्कारप्रमाकरणं प्रत्यक्षम्। साक्षात्कारत्वं हि साक्षात्करोमीत्यनुभवसिद्धो जातिविशेषः। तच्च प्रत्यक्षं घ्राणरसनचक्षुःश्रोत्रत्वग्मनांसीति भेदात् षड्विधम्। साक्षात्कारप्रमापि षड्विधान्द्रियजन्यत्वात्। तत्सन्निकर्षोऽपि षड्विधः। तथा हि संयोगः संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। तत्र द्रव्यं द्रव्यग्राहकचक्षुस्त्वङ्मनोरूपेन्द्रियसंयोगेन गृह्यते। शब्दभिन्नगुणकर्मद्रव्यगतजातिः संयुक्तसमवायेन। शब्दत्वभिन्नगुण[३]कर्मगतजातिः संयुक्तसमवेतसमवायेन। विशेषणविशेष्यभावेनाभावो गृह्यते। सा च विशेषणता बहुविधावसेया सन्निकर्षाणां बहुविधत्वात्। तथा हि—इन्द्रियसंयुक्तविशेषणतया भूतले घटाभावः। इन्द्रियसंयुक्तसमवेतविशेषणतया शुक्ले पीतत्वाभावः। चक्षुःसंयुक्तसमवेतसमवेतविशेषणतया शुक्लत्वे पीतत्वाभावः। श्रोत्रे शब्दाभावो विशेषणतया, गकारे घत्वाभावः

१. ख. कार्ये सम्भवति सति।
२. ख. पूर्ववर्ति तत एव घटादिकार्ये....।
३. ख. गुणगतकर्मगतजातिः।

समवेतविशेषणतया। गत्वे घत्वाभावः समवेतसमवेतविशेषणतया,[1] अनयैव च रीत्याऽन्यत्रापि विशिष्य कार्यकारणभावः सुधीभिर्विभाव्य विभाव्य बोद्धव्य[2]मिति सङ्क्षेपः। एवं सन्निकर्षा अपि लौकिकालौकिकभेदेन द्विविधाः। लौकिकसन्निकर्षास्तु प्रोक्ताः। अलौकिकसन्निकर्षा अधुनोच्यन्ते। ते च सामान्यलक्षणाज्ञानलक्षणायोगजधर्मलक्षणाभेदेन त्रिविधाः। तत्र सामान्यं लक्षणं स्वरूपं यस्या इत्यर्थे सामान्यमेव प्रत्यासत्तिः। सामान्यं लक्षणं विषयो यस्या इत्यर्थे सामान्यज्ञानं प्रत्यासत्तिः। तेनैकस्मिन् धूमे वह्निव्याप्तौ गृह्यमाणायां धूमत्ववह्नित्वसामान्यलक्षणप्रत्यासत्त्या सर्वेषु धूमेषु सर्वेषां वह्नीनां व्याप्तिग्रहः। चन्दनेन समं चक्षुःसंयोगे सति सौरभेण समं घ्राणं[3] संयुक्तसमवायाभावेऽपि सुरभिचन्दनमित्यादौ सौरभज्ञानं ज्ञानलक्षणां विना न सम्भवति। योगजधर्मप्रत्यासत्तिरपि द्विविधा, युक्तयुञ्जानभेदेन योगिनो द्वैविध्यात्।[4] युक्तयोगिनश्चिन्तनसहकारेणातीतानागतानां सर्वदातीतानागतपदार्थानां भानम्। युञ्जानस्य तु चिन्तनेन भानमिति सङ्क्षेपः।

ननु [5]युञ्जानयोगिपदार्थविषयकं ग्रहणमित्युक्तम्। योगस्य चित्तवृत्तिनिरोधात्मकत्वेन चिन्तनासम्भव इति चेत्, अत्रोच्यते—बाह्यविषयचित्तवृत्तिनिरोधो योगस्तज्जन्यधर्मः प्रत्यासत्तिः, न तु चित्तवृत्तिनिरोधमात्रम्, तत्सत्त्वे प्रतिबन्धकवशात्तज्जन्यधर्मानुत्पत्तौ चिन्तनसत्त्वेऽप्यतीतादिपदार्थग्रहणाभाव इति। तदा योगभ्रष्टो भवति। तस्य शरीरपाते सति शुचीनां श्रीमतां योगिनां वा कुले जन्म भवति। तदुक्तं भगवता—

'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते'।

अथवा योगिनामेव कुले भवति धीमतामिति। तथा च सकलानीन्द्रियाण्युपसंहृत्य मनश्च हृदये संस्थाप्य बाह्यविषयग्रहणं न सम्भवति। योगजधर्मोत्पत्तौ तु योगिनां बाह्यपदार्थत्व[6]चिन्तनेऽपि न योगक्षतिः, योगजन्यधर्मोत्पत्तौ योगसिद्धेर्जायमानत्वात्। यागजन्यधर्मोत्पत्तौ तत्सम्बन्धेन स्वर्गोत्पत्तेर्जायमानत्वात्। परे तु

---

१. ख. विशेषण।
२. ख़. बोधव्य इति सङ्क्षेपः।
३. ख. घ्राणसंयुक्तसमवायाभावेऽपि।
४. ख. युक्तयोगिनां सर्वदातीतानागतपदार्थानां भानम्। युञ्जानस्य तु चिन्तनेन भानमिति सङ्क्षेप इति पाठ उपलभ्यते।
५. ख. ननु युञ्जानयोगिनश्चिन्तनसहकारेणातीतानागतपदार्थविषयकं ग्रहणमित्युक्तम्।
६. ख. बाह्यपदार्थचिन्तनेऽपि।

बाह्यपदार्थविषयकचित्तवृत्तिनिरोधे सत्यपि सर्वात्मकस्य ब्रह्मणश्चिन्तनाद् बाह्यपदार्थावगम इत्याहुः। ब्रह्मचिन्तनन्तु भ्रुवोर्मध्ये मूर्ध्नि च सुषुम्नामार्गेण प्राणं संस्थाप्य योगधारणं भवति। तथा प्राणप्रयाणोत्सवे ओमित्येकाक्षरं ब्रह्मवाचकपदमुच्चारयन् परं ब्रह्म स्मरति। तदा ब्रह्मसद्म प्रयातीति सङ्क्षेपः। निरुक्तसाक्षात्कारोऽपि पुनर्द्विविधः, सविकल्पकनिर्विकल्पकभेदात्। सम्बन्धावगाहिसप्रकारकं वा ज्ञानं सविकल्पकम्। सम्बन्धानवगाहिनिष्प्रकारकं वा ज्ञानं निर्विकल्पकमिति।

अत्र केचित्—निर्विकल्पकमेव साक्षात्कारः, परमार्थसत्स्वलक्षणशुद्धघटविषयत्वात्। सविकल्पकन्तु अनुमित्युपमितिशाब्दबोधवदलीकावगाहित्वान्न प्रत्यक्षमित्याहुः, तन्न अनुगतधर्मस्य घटत्वादेरयं घट[1] इति प्रत्यक्षसिद्धस्यालीकत्वासिद्धेरिति सङ्क्षेपः। इति व्याख्यातं प्रत्यक्षम्।

अथानुमानं निरूप्यते। तच्चानुमितिकरणमनुमानम्। तत्र व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं तज्जन्यं ज्ञानमनुमितिः। व्याप्तिप्रकारकपक्षधर्मताज्ञानं तु वह्निव्याप्यधूमवान् पर्वत इत्याकारकपरामर्शात्मकम्। तज्जन्यं पर्वतो वह्निमानित्याकारकज्ञानमनुमितिः। धूमो वह्निव्याप्य इत्याकारकं लिङ्गज्ञानमनुमानम्।

ननु ज्ञायमानं लिङ्गमतीतलिङ्गस्थले लिङ्गाभावेनानुमितिर्न स्यात्। अस्मन्मते[2] तु तत्रापि लिङ्गज्ञानस्य सत्त्वादनुमितिर्भवत्येव। अथानुमानं न प्रमाणमुपाधिसंशयात्। योग्योपाधीनां योग्यानुपलब्ध्यभावनिश्चयेऽप्ययोग्योपाधिसंशयाद् व्यभिचारसंशयात्।

न च भूयः सहचारदर्शनाद्व्याप्तिग्रहो भविष्यतीति वाच्यम्। शतशः सहचरितयोरपि पार्थिवत्वलोहभेद्यत्वयोर्हीरके व्यतिरेकदर्शनात्। धूमदर्शनानन्तरं वह्नौ प्रवृत्तिस्तु प्रायो वह्निर्भविष्यतीति सम्भावनामात्रत्वादिति। प्रत्यक्षातिरिक्तमनुमानोपमानशब्दानां न प्रमाणत्वमिति चेत्, न, अप्रमाणसाधकानुमानस्य प्रमाणत्वेऽनुमानस्य प्रामाण्यं सिद्धमेव।

अथ तदनुमानस्याप्रमाणत्वेऽनुमानस्याप्रामाण्यरूपविषयबाधादनुमानस्य प्रामाण्यं सिद्धमेव। अनुमानमप्रमाणमिति वाक्यस्य प्रामाण्ये शब्दस्य प्रामाण्यं सिद्धमेव। तद्वाक्यस्याप्रामाण्ये त्वनुमानाप्रामाण्यरूपविषयबाधादनुमानस्य प्रामाण्यं सिद्धमेव। अथानुमितिहेतुव्याप्तिज्ञानविषयीभूता का व्याप्तिः।

अत्रोच्यते—प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यविशिष्टहेतुतावच्छेदकं

१. ख. घटत्वजात्यादेरयं घट;  २. ख. अस्मिन्मते तु।

व्याप्तिः। अत्र सामानाधिकरण्यविशिष्टहेतुतावच्छेदकपदोपादानात्तादृशसाध्य-सामानाधिकरण्यस्य पर्वतवर्तिरासभादौ सत्त्वेऽपि न क्षतिः। भवति हि वह्निमान् धूमादित्यादौ धूमसमानाधिकरणा घटपटादीनामभावास्तत्प्रतियोगितावच्छेदकं घटत्वपटत्वादिकं वह्निमत्त्वमनवच्छेदकं तदवच्छिन्नवह्निसामानाधिकरण्यं धूम इति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ तु वह्निसमानाधिकरणधूमाभावस्य सत्त्वात् तत्प्रतियोगितावच्छेदकं धूमत्वमस्तीति न लक्षणसमन्वयः। कपिसंयोगि एतद्वृक्षत्वादित्यत्र मूलावच्छेदेन एतद्वृक्षत्ववति कपिसंयोगाभावस्यासत्त्वात् तत्प्रतियोगितावच्छेदकं कपिसंयोगत्वमित्यव्याप्तिरत उक्तं प्रतियोग्यसमानाधिकरणेति। अत्र प्रतियोगित्वविरोधित्वम्। लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः। कपिसंयोगाभावस्य कपिसंयोगरूपप्रतियोगिसमानाधिकरणत्वान्नाव्याप्तिः। सेयं व्याप्तिर्यत्र धूमस्तत्राग्निर्यथा महानस इति सहचारदर्शनगम्येति सद्धेतौ सर्वत्र निरुपाधिकसम्बन्धोऽस्ति। अत एवानौपाधिकसम्बन्धो व्याप्तिरिति मणिकारोक्तमपि सङ्गच्छते। कोऽयमत्रोपाधिः। साध्याव्यपकत्वे सति साधनाव्यापक उपाधिः। स चात्रार्द्रेन्धनं, तच्च धूमस्य साध्यस्य व्यापकं यत्र धूमस्तत्रार्द्रेन्धनमिति। साध्यस्य वह्नेरव्यापकं तथा चायःपिण्डे आद्रेन्धनाभावेन धूमाभावः साध्यते। वह्निमान् धूमादित्यादौ तु नोपाधिरस्ति। यदि स्यात्तर्ह्युपलभ्येत इति अनुपलम्भेनोपाध्यभावो निश्चीयते। यत्र च साध्यनिश्चयोऽस्ति तत्र नानुमितिरिति साध्यनिश्चयाभावः कारणमिति।

ननु पर्वतो वह्निमानिति पर्वते यदि साध्यनिश्चयोऽस्ति पर्वते वह्निमनुमिनुयामिति सिषाधयिषाऽप्यस्ति तदा पर्वते त्वनुमितिदर्शनात्। सिषाधयिषाविरहविशिष्टसाध्यनिश्चयाभावः पक्षता। सा च सिद्धिसत्त्वेऽप्यस्तीति सिषाधयिषा उत्तेजिका वाच्या। उत्तेजकत्वं प्रतिबन्धकप्रतिबन्धकत्वम्।[1] प्रतिबन्धिका सिषाधयिषा सा च साध्यनिश्चयाभावः कारणं तत्प्रतियोगिसाध्यनिश्चयस्तत्प्रतिबन्धिका सिषाधयिषा सा च साध्यनिश्चये प्रतिबन्धिकेति साध्यनिश्चये सत्यपि सिषाधयिषा-सत्त्वेऽनुमितिर्भवत्येवेति सङ्क्षेपः। तच्चानुमानं द्विविधम्—स्वार्थं परार्थञ्चेति। स्वप्रतिपत्तिजनकं स्वार्थं, परप्रतिपत्तिजनकं परार्थम्। तथा हि स्वयमेव महानसादौ धूमे वह्निव्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तस्मिन् पर्वतेऽयं पर्वतो वह्निमान्न वेति सन्दिग्धः अ[2]विच्छिन्नमूलां गगनगतां धूमरेखां पश्यन्नेकसम्बन्धिज्ञानमपरसम्बन्धि-स्मारकमिति धूमाग्न्योर्व्याप्तिं स्मरति धूमो वह्निव्याप्य इति। ततो वह्निव्याप्यधूमवान्

१. ख. प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वम्। तथा चानुमितौ साध्यनिश्चयाभावः कारणं तत्प्रतियोगिसाध्यनिश्चयस्तत्प्रतिबन्धिका सिषाधयिषा सा च.....इति पाठ उपलभ्यते।

२. ख. अनव्यवच्छिन्न।

पर्वत इति व्याप्तिप्रकारकपक्षधर्मताज्ञानं स एव परामर्शः, तज्जन्यज्ञानं पर्वतो वह्निमानित्यनुमितिस्तत्स्वार्थानुमानम्।

परार्थानुमानन्तु परं बोधयितुं पञ्चावयववाक्यं प्रयुङ्क्ते। तथा हि पर्वतोऽयं वह्निमानिति शिष्यं प्रतिपत्तिज्ञाते कुत इति शिष्येण पृष्टे धूमादिति गुरुणा हेतुप्रयोगः कृतः। ततो धूमोऽस्तु वह्निमांस्त्विति शिष्यवचनं श्रुत्वा यो यो धूमवान् सोऽग्निमान् यथा महानस इत्युदाहरणं शिष्यं प्रत्युक्तम्। तथा चायं वह्निव्याप्यधूमवानित्युपनयवाक्यं प्रयुक्तम्। ततो वह्निव्याप्यधूमवत्त्ववान् पर्वतोऽयं वह्निमानिति निगमनम्। पञ्चावयवास्तु—पर्वतो वह्निमानिति प्रतिज्ञा, धूमादिति हेतुः, यो यो धूमवान् सोऽग्निमान्, यथा महानस इत्युदाहरणम्, तथा चायमित्युपनयः, तस्मात्तथेति निगमनमिति पञ्चावयववाक्यात् पञ्चरूपोपपन्नाद् हेतोः परोऽप्यग्निं प्रतिपद्यते। पञ्चरूपाणि तु पक्षधर्मत्वम्, सपक्षसत्त्वम्[1], विपक्षाद् व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वञ्चेति। अत्र पर्वते अग्निः साध्यः, धूमो हेतुः। स चान्वयव्यतिरेकी, अन्वयेन व्यतिरेकेण च व्याप्तेः सत्त्वात्। यत्र धूमस्तत्राग्निरित्यन्वयः। यत्र वह्निर्नास्ति, तत्र धूमो नास्तीति व्यतिरेकः। तदेवं धूमो हेतुरन्वयव्यतिरेकी, अन्वयेन व्यतिरेकेण च दृष्टान्तस्य सत्त्वात्। अन्वयव्यतिरेकिहेतुस्तु पञ्चरूपोपपन्न एव स्वसाध्यं साधयितुं समर्थः, न त्वेकेन रूपेणापि हीनः। धूमस्य हेतोः पर्वतपक्षधर्मत्वमस्ति, पक्षे पर्वते धूमस्य सत्त्वात्। सपक्षे महानसे धूमस्य सत्त्वमस्ति। विपक्षाद् ह्रदात् व्यावृत्तिरप्यस्ति। धूमेन पर्वते वह्नौ साध्ये वह्निरूपो विषयोऽबाधितोऽस्ति। केनापि प्रमाणेन न बाध इति धूमेन पर्वते वह्नौ साध्ये वह्न्यभावसाधकं हेत्वन्तरं नास्तीति धूमस्यासत्प्रतिपक्षत्वमस्तीति। के ते पक्षसपक्षविपक्षाः। सन्दिग्धसाध्यवान् पक्षः। यथा धूमानुमाने पर्वतः। निश्चितसाध्यवान् सपक्षः, यथा तत्रैव महानस इति। निश्चितसाध्याभाववान् विपक्षः, यथा तत्रैव महाह्रद इति। केवलान्वयिकेवलव्यतिरेकिहेतुः चतूरूपोपपन्न एव स्वसाध्यं साधयितुं समर्थः, केवलान्वयिनि विपक्षाभावात्, केवलव्यतिरेकिणि सपक्षाभावाच्च। केवलान्वयिहेतुस्तु वाच्यः, ज्ञेयत्वादित्यादिरूपः। केवलव्यतिरेकिहेतुस्तु पृथिवीतरेभ्यो भिद्यते, गन्धवत्त्वादित्यादिरूपः। अन्वयव्याप्तिस्तूक्तैव, व्यतिरेकव्याप्तिस्त्वधुनोच्यते। सा तु साध्याभावव्यापकाभावप्रतियोगित्वरूपा। तदर्थस्तु यत्र वह्न्यभावस्तत्र धूमाभाव इति। वह्न्यभावव्यापकीभूतो यो धूमाभावस्तत्प्रतियोगिधूम इति।

---

१. (ख) सपक्षे सत्त्वम्।

ननु साध्याभावहेत्वभावयोर्व्याप्तिग्रहात् कथं साध्यानुमितिरन्यथा वह्नि-धूमयोर्व्याप्तिग्रहाद् घटानुमितिः स्यादिति चेत्, न, साध्याभावव्यापकाभाव-प्रतियोगित्वेन पक्षधर्मतानिश्चयः साध्यानुमापकस्तथा च वह्न्यभावव्यापकाभावप्रति-योगिधूमवान् पर्वत इति परामर्शात् पर्वतो वह्निमानित्यनुमितिर्भवत्येवेति सङ्क्षेपः।

अथ सद्धेतुं निरूप्य हेत्वाभासा निरूप्यन्ते। ते चासिद्धविरुद्धानैकान्तिक-प्रकरणसमकालात्ययापदिष्टाः। तत्रासिद्धादिपञ्चान्यतमत्वं हेत्वाभासत्वमिति। तेषु व्यभिचाराद्यन्यत्वे सति परामर्शप्रतिबन्धकतावच्छेदकधर्मवत्त्वमसिद्धत्वम्। स च त्रिविधः—आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्चेति। पक्षे पक्षता-वच्छेदकासिद्धिः आश्रयासिद्धः[1], यथा गगनारविन्दं सुरभि अरविन्दत्वात्, सरोजा-रविन्दवदित्यत्र पक्षे अरविन्दे गगनीयत्वमसिद्धमिति अरविन्दत्वरूपहेतोर्गगनीयत्व-विशिष्टारविन्दात्मकाश्रयः सिद्धः। स्वरूपासिद्धस्तु पक्षे हेत्वभावः। यथा पर्वतो द्रव्यं जलत्वात्, इत्यत्र पर्वते हेत्वभावः। एतदुभयभिन्नासिद्धो व्याप्यत्वासिद्धं यथा पर्वतो वह्निमान् धूलीपटलादित्यत्र धूलीपटले धूमनिष्ठव्याप्यभावविरुद्धत्वं साध्यव्यापकाभावप्रतियोगित्वं, यथा गौरश्वत्वादित्यत्र गोत्वव्यापको योऽश्वत्वा-भावस्तत्प्रतियोग्यश्वत्वमिति। अनैकान्तिकस्त्रिविधः। साधारणासाधारणानुपसंहारि-भेदात्। तत्र साधारणादित्रितयान्यतमत्वमनैकान्तिकत्वम्। स एव सव्यभिचारी-त्युच्यते। तत्र साध्यवदन्यवृत्तित्वं साधारणत्वम्। यथा धूमवान् वह्नेरित्यत्र धूमवदस्मिन्नयःपिण्डे वह्नेर्विद्यमानत्वात्। सपक्षव्यावृत्तो हेतुरसाधारणः, यथा शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वं हि [2]नित्यत्वनिश्चयवद् गगनादिव्यावृत्तमिति। अवृत्तिसाध्यसाधनान्यतरत्वमनुपसंहारित्वम्। यथा पर्वतः आकाशवान् घटात्। घटवानाकाशाद् वा। उभयावृत्तिपक्षे तु आकाशवान् दिश इत्यपि बोध्यम्। प्रकरणसमशब्देन सत्प्रतिपक्ष इत्युच्यते। तथा च यस्य साध्याभावसाधकं हेत्वन्तरमस्ति स सत्प्रतिपक्षः, यथा शब्दो नित्यः श्रावणत्वात्, शब्दत्ववत्, शब्दोऽनित्यः कार्यत्वाद् घटवदिति। पक्षे साध्याभावनिश्चयः कालात्ययापदिष्टः स एव बाध इत्युच्यते। यथा ह्रदो वह्निमान् धूमात्। उत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादिति सङ्क्षेपः। इति निरूपितमनुमानम्।

अथोपमानं निरूप्यते। तत्रोपमितिकरणमुपमानम्। तत् सादृश्यविशिष्टपिण्डज्ञानम्, तथा हि क्वचिद् गवयमजानन् आरण्यकपुरुषं प्रति कीदृग् गवय इति पृच्छति, तेन गोसदृशो गवय इत्युत्तरितो...... मनुसरन् गोसदृशं पिण्डं पश्यति, तदा गोसदृशोऽयं गवय इति जानाति, तदेवोपमानम्। अतिदेशवाक्यार्थस्मरणं व्यापारः। ततो गवयो

---

१. ख. आश्रयासिद्धिरिति पाठः; २. ख. नित्यत्वे।

गवयपदवाच्य इत्युपमितिरिति। नन्वतिदेशवाक्यार्थज्ञानं कथं भविष्यतीति वाक्यस्य पदघटितत्वात्। पदं तु वर्णघटितं वर्णानामाशुतरविनाशित्वात्। वर्णघटितपदज्ञानाभावे वाक्यार्थज्ञानाभावादिति चेत्, न, तत्तद्वर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णानुभवकाले तत्तद्वर्णस्मृत्या पदप्रतीतिर्जन्यते। एवं तत्तत्पदानुभवजनितसंस्कारैरुद्बोधकसमवधानादन्तिमपदानुभवसहायेन वाक्यार्थप्रतीतिरिति पदसमूहो वाक्यमिति।

अथ शब्दो निरूप्यते। शाब्दप्रमितिकरणं शब्दः। शाब्दत्वं हि, शब्दात्प्रत्येमीत्यनुभवसिद्धो जातिविशेषः। तत्र मौनिश्लोकादौ शब्दाभावेऽपि शाब्दबोधोदयात्। शब्दज्ञानमेव करणं, वृत्त्या पदजन्यपदार्थोपस्थितिर्व्यापारः। वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धः। पदजन्यपदोपादानात् प्रत्यक्षादिना पदार्थोपस्थितौ शाब्दबोधाभावेऽपि न क्षतिः। घटपदात् समवायेनाकाशोपस्थितावाकाशस्य शाब्दबोधः स्यादिति वृत्त्येत्युक्तम्। तस्य निराकाङ्क्षादौ शाब्दबोधाभावादाकाङ्क्षादिकं सहकारि। तत्र यत्पदं यत्पदेन विनान्वयबोधाजनकं तत्पदं तत्पदेन सह साकाङ्क्षं, यथा घटपदमम्पदेन विना घटकर्मकान्वयबोधाजनकमिति पटपदमम्पदेन सह साकाङ्क्षम्, एवमानयनपदादावपि बोध्यम्। अर्थाबाधो योग्यता। तेन पयसा सिञ्चतीति वाक्यं योग्यं शेके पयःकरणत्वरूपार्थस्याबाधात्। वह्निना सिञ्चतीति वाक्यं न योग्यं शेके वह्निकरणत्वस्य बाधितत्वादिति। पदाव्यवधानमासत्तिः। गिरिरग्निमान् भुक्तं देवदत्तेनेति वाक्यमासन्नम्। गिरिर्भुक्तमग्निमान् देवदत्तेनेति वाक्यमनासन्नमिति। तात्पर्यज्ञानमपि शाब्दबोधे कारणम्। तच्च तात्पर्यप्रकरणादिना ग्राह्यम्। तेन सैन्धवमानयेत्यादौ तुरगतात्पर्यग्रहात्तुरगबोधः। लवणतात्पर्यग्रहाच्च लवणबोध इति, तात्पर्यञ्च तत्प्रतीतीच्छयोच्चरितत्वम्। अत्र वृत्तिशब्देन शक्तिलक्षणान्यतरसम्बन्ध इत्युक्तम्। तत्र शक्तिः का? अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाशक्तिः। यथा घटपदस्य घटे शक्तिः। शक्यसम्बन्धो लक्षणा यथा गङ्गापदशक्यः प्रवाहस्तत्सम्बन्धस्तीर इति गङ्गापदस्य तीरे लक्षणा। सा तु गङ्गायां घोष इत्यादौ गङ्गापदं स्वार्थप्रवाहं परित्यज्य लक्षणया तीरं बोधयतीत्यत्र जहत्स्वार्था लक्षणा 'श्वेतोऽश्वो[1] धावति' इत्यत्र श्वेतपदं श्वेतगुणमपरित्यज्य श्वेताऽश्वे लाक्षणिकमित्यजहत्स्वार्था लक्षणा। तत्त्वमसीत्यादौ जहदजहल्लक्षणा। इयमेव भागलक्षणेत्युच्यते। तथा हि तत्पदेन सर्वज्ञत्वविशिष्टचैतन्यमुच्यते, त्वंपदेन किञ्चिज्ज्ञत्वविशिष्टं चैतन्यमुच्यते। तत्र सर्वज्ञत्वविशिष्टस्य[2] किञ्चिज्ज्ञत्वांशपरित्यागादिविरुद्धांशद्वयपरित्यागे सति चैतन्यमात्र-

१. ख. श्वेतो धावतीत्यत्र।

२. सर्वज्ञत्वविशिष्टचैतन्यस्य ऐक्यासम्भवात् सर्वज्ञत्वविशिष्टचैतन्यस्य सर्वज्ञत्वांशपरित्यागः। किञ्चिज्ज्ञत्वविशिष्टचैतन्यस्य किञ्चिज्ज्ञत्वांशपरित्यागादि.....इति पाठः।

मवशिष्यत इति जहदजहल्लक्षणेति सङ्क्षेपः। सा च लक्षणा पदनिष्ठा वृत्तित्वाच्छक्तिवत्। यथा गभीरायां नद्यां घोष इत्यत्र नदीपदं गभीरनदीतीरे लाक्षणिकं गभीरपदं तात्पर्यग्राहकम्। न च विनिगमनाविरहाद् गभीरपदमेव गभीर-नदीतीरे लाक्षणिकं नदीपदं तात्पर्यग्राहकं गम्भीरपदोत्तरसप्तम्या घोषाधारत्व-बोधकत्वमिति वाच्यम्। गभीरायामिति विशेषणविभक्तेः पदसाधुत्वार्थकत्वात्। न तु वाक्ये लक्षणा वाक्ये शक्यत्वात्[१] शक्यसम्बन्धरूपा लक्षणा नास्तीति नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वाद् राजपुरुष इत्यादौ राजपदं राजसम्बन्धिनि लाक्षणिकमिति राजसम्बन्ध्यभिन्नपुरुष इत्यभेदान्वयः। आख्यातस्य कृतौ शक्तिः। पचति पाकं करोतीत्यादौ कृत्यर्थकेन कृधातुना सर्वाख्यातविवरणात्। विवरणन्तु तत्समानार्थकेन तदर्थकथनम्। तथा 'पचति चैत्रः' इत्यत्र पाकानुकूलकृतिमान् चैत्र इति बोधः। अचेतने रथो गच्छतीत्यादौ गमनानुकूलव्यापारवान् रथ इत्यादि-बोधादाख्यातस्य व्यापारे लक्षणा। यजेतेत्यादाविष्टसाधनत्वं बलवदनिष्टा-ननुबन्धित्वकृतिसाध्यत्वं च विध्यर्थः। तेनेष्टाजनके मण्डलीकरणादौ बलवदनिष्ट-जनके मधुविषसम्पृक्तान्नभोजनादौ सुमेरुशृङ्गारोहणादौ कृत्यसाध्ये च न प्रवृत्ति-रिति। यागस्याशुतरविनाशिनः कालान्तरभाविफलजनकत्वासम्भवात् फलपर्यन्ता-वस्थायिव्यापाररूपस्थाय्यपूर्वं कल्प्यत इति सङ्क्षेपः। इति निरूपितानि चत्वारि प्रमाणानि। एतदतिरिक्तं प्रमाणान्तरं नास्ति।

नन्वर्थापत्तिरपि पृथक् प्रमाणान्तरमस्तीति चेत्, तथा हि 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे श्रुते वा दिवाभुञ्जानस्य पीनत्वं रात्रिभोजनमन्तरेणानुपपन्न-मित्यर्थाक्षिप्तं रात्रिभोजनं कल्प्यत इति चेत्, न, रात्रिभोजनस्यानुमानगम्यत्वात्। तथा हि 'पीनो देवदत्तो रात्रिभोजनवान्' रोगियोगिभिन्नत्वे सति दिवाभुञ्जानत्वे सति च पीनत्वात्। यत्र रात्रिभोजनत्वाभावः, तत्र रोगियोगिभिन्नत्वे सति दिवाभुञ्जानत्वे सति च पीनत्वाभावः, यथा दिवारात्र्यभुञ्जानोऽपीन इति केवलव्यतिरेक्यनुमानेनैव रात्रिभोजनस्यावगमादिति। तथाप्यभावग्रहणार्थमनुपलब्धि-रूपमभावाख्यं पृथक् प्रमाणान्तरं स्वीकार्यमिति चेत्। तथा हि अभावेन समं संयोगादिक्लृप्तसन्निकर्षाणामभावाद् योग्यानुपलब्धिरूपपृथक् प्रमाणान्तरं स्वीकार्यम्। तदर्थस्तु घटो यदि स्यात्तर्ह्युपलभ्येत नोपलभ्यत इति कृत्वा नास्तीति योग्यानुपलब्ध्या घटाभाव ज्ञानमित्याहुः। तन्न। प्रमाणान्तरकल्पनापेक्षया संयुक्त-विशेषणतादिरूपसन्निकर्षान्तरकल्पनाया लघीयस्त्वात्। प्रमाणान्तरकल्पनेऽपि व्यापाररूपसन्निकर्षान्तरकल्पनाया आवश्यकत्वाद् व्यापारवद् असाधारणकारणं

१. ख. शक्त्यभावात्।

करणमित्युक्तत्वात्। तथा च योग्यानुपलब्धिरप्यभावग्रहे सहकारिणी। तथा हि संसर्गाभावग्रहे योग्यप्रतियोग्यनुपलब्धिः कारणं यथा घटानुपलम्भे घटाभावग्रहः। भूतले पिशाचात्यन्ताभावस्य न प्रत्यक्षं, पिशाचरूपप्रतियोगिनोऽयोग्यत्वात्। अन्योन्याभावग्रहे त्वधिकरणयोग्यत्वस्य कारणत्वम्। स्तम्भो न पिशाच इति योग्ये स्तम्भरूपाधिकरणे त्वयोग्यस्यापि पिशाचस्य स्तम्भो न पिशाच इत्यन्योन्याभावः प्रत्यक्ष इति सङ्क्षेपः।

अथ[1] ज्ञानप्रामाण्यं स्वतो ग्राह्यमिति मीमांसकाः। तेषामयमाशयः—भट्टमते ज्ञानमतीन्द्रियं तेन घटादिविषये ज्ञातताख्यं फलं जन्यते। ज्ञातो घट इति ज्ञाततायाः प्रत्यक्षत्वात्। तथा च ज्ञाततान्यथानुपपत्तिप्रसूतार्थापत्त्या ज्ञाते गृहीते ज्ञानगतं प्रामाण्यमपि अर्थापत्त्यैव गृह्यत इति यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतस्त्वमिति। गुरुमते तु घटमहं जानामीत्यादिज्ञानाकार इति। स च त्रिपुटीप्रत्यक्षवादीति ज्ञानं ज्ञेयमात्मेति ज्ञाने त्रितयमेव भासते स्वेनैव स्वग्रहे स्वनिष्ठप्रामाण्यमपि स्वेनैव गृह्यत इति गुरुमते स्वतस्त्वम्। मुरारिमते तु घटोपममिति ज्ञानाकारः, तज्ज्ञानं घटमहं जानामीत्यनुव्यवसायेन यदा ज्ञानं गृह्यते तदा तज्ज्ञानप्रामाण्यमप्यनुव्यवसायेन गृह्यत इति। त्रयाणां मतेऽपि यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वमिति। तदपरे न क्षमन्ते। तथा हि तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपं प्रामाण्यं तवाभिमतम्, यथा रजते इदं रजतमिति ज्ञाने रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वरूपप्रामाण्यं व्यवसायोपनीतमनुव्यवसायेन गृह्यत इति तावन्मात्रं न प्रामाण्यम्, भ्रमसाधारण्यात्। तथा हि रङ्गरजतयोरिमे रजतरङ्गे इति भ्रमात्मके ज्ञाने रजतत्ववद् विशेष्यकत्वस्य रङ्गत्ववद्विशेष्यकत्वस्य रजतत्वप्रकारकत्वस्य रङ्गत्ववत्[2]प्रकारकत्वस्य सत्त्वात् तद्वारणार्थं रजतत्ववद्विशेष्यकत्वावच्छेदेन रजतत्वप्रकारकत्वस्य रङ्गत्ववद्विशेष्यकत्वावच्छेदेन रङ्गत्वप्रकारकत्वस्य प्रामाण्ये विवक्षितत्वात्तादृशं प्रामाण्यं व्यवसायेनानुपनीतत्वादनुव्यवसायेन न गृह्यत इति ग्रन्थाधिक्यभयादधिकं न लिख्यत इति वाचा[3] प्रमाणानि निरूपितानि।

## अथ प्रमेयनिरूपणम्

अथ प्रमेयाण्युच्यन्ते। तान्यात्माद्यपवर्गान्तानि। तथा च न्यायसूत्रम्—

"आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमेयम्" इति। तत्र आत्मत्वसामान्यवानात्मा। स च नित्यो विभुश्च बुद्ध्यादिगुणलिङ्ग-

१. ज्ञानप्रामाण्यं परतो ग्राह्यमिति नैयायिका वदन्ति। ज्ञानप्रामाण्यं स्वतो ग्राह्यमिति मीमांसका वदन्ति। अत्र मीमांसकमतमुपस्थाप्य अनन्तरं खण्डयति ग्रन्थकारः।

२. ख. रङ्गत्वप्रकारकत्वस्य।

३. ख. वाचा इति पाठो नास्ति। चत्वारि इति पाठः।

दनुमेयः। तथा हि बुद्ध्यादयो विशेषगुणाः, अनित्यत्वे सत्येकेन्द्रियग्राह्यत्वाद् रूपादिवत्। रूपत्वे व्यभिचारवारणायानित्यत्वे सति, घटेऽतिव्याप्तिवारणायैकेति। न च पृथिव्यप्तेजोवाय्वाकाशगुणाः, मानसप्रत्यक्षरूपत्वात्[1]। न च दिक्काल-मनोगुणाः, विशेषगुणत्वात्, गुणाश्च गुण्याश्रिता इति परिशेषात्तदाश्रय आत्मेति। स चात्मा द्विविधः। जीवात्मा परमात्मा चेति। जीवात्मनस्त्वस्मदादयोऽनन्ता एवेति, परमात्मा तु ईश्वरः एक एव, स च सर्वज्ञः।

भोगायतनमन्त्यावयवि शरीरम्। यदवच्छेदेनात्मनि भोगो जायते तद्भोगा-यतनम्। भोगस्तु सुखदुःखसाक्षात्कारः। द्रव्यानारम्भकं कार्यं द्रव्यमन्त्यावयवि चेष्टाश्रयो वा शरीरं, चेष्टा तु हिताहितप्राप्तिपरिहारार्था क्रियेति।

शरीरसंयुक्तं ज्ञानकारणमतीन्द्रियमिन्द्रियम्[2]। आत्मन्यतिव्याप्तिवारणायाती-न्द्रियेति। आत्मा तु मनोरूपेन्द्रियग्राह्यः। कालादावतिव्याप्तिवारणाय ज्ञानकारणेति। निर्विकल्पकेऽतिव्याप्तिवारणाय शरीरसंयुक्तमिति। पदार्थो[3] द्विविधः, भावाभाव-भेदात्। भावाः षडेव पदार्थाः। ते च द्रव्यगुणकर्मसामान्यसमवायाख्याः। द्रव्यत्व-सामान्यवद् द्रव्यं, गुणाश्रयो वेति। तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकाल-दिगात्ममनांसि नवैव। तत्र पृथिवीत्वसामान्यवती पृथिवी। सा च नित्यानित्यभेदाद् द्विविधा। नित्या परमाणुरूपा, अनित्या कार्यरूपा। सा पुनस्त्रिविधा, शरीरेन्द्रिय-विषयभेदात्। शरीरमस्मदादीनां प्रत्यक्षसिद्धम्। तच्च द्विविधम्। योनिजमयोनिजं द्विविधम्, जरायुजाण्डजभेदात्[4]। जरायुजं मनुष्यपश्वादीनां[5], जरायुशब्देन वेष्टन-चर्मोच्यते। अण्डजं पक्षिसर्पादीनाम्। अयोनिजमपि द्विविधम्, स्वेदजोद्भिजादिभेदात्। स्वेदजं कृमिकीटमशकादीनाम्। उद्भिज्जन्तु वृक्षलतादीनामिति। इन्द्रियं घ्राणरसन-चक्षुश्रोत्रत्वङ्मनांसीति[6] भेदात् षड्विधम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति। रसग्राहकमिन्द्रियं रसनम्। तच्च जिह्वाग्रवर्ति। रूपग्राहकमिन्द्रियं चक्षुः। तच्च कृष्णताराग्रवर्ति। शब्दग्राहकमिन्द्रियं श्रोत्रम्। तच्च कर्णशष्कुल्यवच्छिन्नं नभः। स्पर्शग्राहकमिन्द्रियं त्वक् सम्पूर्णशरीरवर्ति। विषयो मृत्पाषाणादिरिति।

अप्त्वसामान्यवत्य आपः। ताश्च द्विविधाः, नित्यानित्यभेदात्। नित्याः परमाणुरूपाः, अनित्याः कार्यरूपाः, ता आपः शरीरेन्द्रियविषयभेदात्त्रिविधाः, शरीरं वरुणलोके प्रसिद्धम्। इन्द्रियं रसग्राहकं रसनं तच्च जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः।

---

१. ख. मानसाः प्रत्यक्षरूपत्वात्।

२. ख. ज्ञानकारणमतीन्द्रियमिन्द्रियम्।

३. ख. अर्थो द्विविधः।

४. ख. योनिजं द्विविधं, जरायुजाण्डजभेदात्।

५. ख. मनुष्यपशूनां;

६. ख. मनांसीति।

तेजस्त्वसामान्यवत्तेजः। तद्द्विविधम्—नित्यमनित्यञ्च। नित्यं परमाणुलक्षणं, कार्यलक्षणमनित्यम्। तत्त्रिविधम्, शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके, इन्द्रियं रूपग्राहकं चक्षुः। विषयश्चतुर्विधः, भौमदिव्यौदर्याकरजभेदात्। भौमं वह्न्यादिकम्। अविन्धनं दिव्यं विद्युदादि। भुक्तान्नपरिणामहेतुरौदर्यं, आकरजं सुवर्णादिः। सुवर्णस्य तैजसत्वे किं मानमिति चेत्, अत्रोच्यते—सुवर्णं तैजसम्, अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वात्। पृथिवीजलयोर्द्रवत्वस्यात्यन्तानलसंयोगनाश्यत्वात्तदुभयद्रवत्वं विलक्षणं द्रवत्वस्य सुवर्णे सत्त्वात् सुवर्णं तैजसमिति सङ्क्षेपः।

वायुत्वं[1]सामान्यवान् वायुः। स च द्विविधः, नित्यानित्यभेदात्। नित्यः परमाणुलक्षणः। अनित्यः कार्यलक्षणः। स च चतुर्विधः, शरीरेन्द्रियविषयप्राण-भेदात्। शरीरं वायुलोके प्रसिद्धम्। इन्द्रियं स्पर्शग्राहकं त्वक्। विषयो वृक्षादिकम्पजनकः। प्राणः शरीराभ्यन्तरसञ्चारी वायुः। स च पञ्चस्थानभेदात् पञ्चविधः, प्राणापानव्यानोदानसमान इति।

हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः।। इति।

स च वायुः शाखाकम्पादिनानुमेयः, स च न प्रत्यक्षः, उद्भूतरूपाभावात्। आत्मान्यप्रत्यक्षत्वावच्छिन्नं प्रत्युद्भूतरूपस्य हेतुत्वात्, वायुस्तदभावान्न प्रत्यक्ष इति प्राञ्चः।

नव्यास्तु चाक्षुषप्रत्यक्षं प्रत्येवोद्भूतरूपस्य हेतुत्वं, स्पार्शनप्रत्यक्षत्वा-वच्छिन्नं प्रति महत्त्वसमानाधिकरणोद्भूतस्पर्शवत्त्वेन हेतुत्वम्। वायौ स्पार्शनप्रत्यक्षं भवत्येव, वायुं स्पृशामीति प्रतीतेः। न चेयं स्पर्शविषयिणी प्रतीतिस्तस्या वायु-विशेष्यकत्वं न स्यादिति सङ्क्षेपः।

अथ चतुर्णां भूतानामुत्पत्तिविनाशक्रमः कथ्यते। महेश्वरसंजिहीर्षावशात् परमाणुक्रिया ततः परमाणुद्वयविभागः। विभागात् पूर्वसंयोगनाशस्ततो द्व्यणुकनाशः, द्व्यणुकनाशात् त्र्यणुकनाश इत्यादिक्रमेण ब्रह्माण्डान्तपर्यन्तविनाशः, एवं जलतेजो-वायुनाशः। त्र्यणुकादीनां समवायिकारणनाशाद् विनाशः। अत्र द्व्यणुकनाशस्थले चासमवायिकारणनाशस्यावश्यकत्वात् त्र्यणुकादीनामप्यसमवायिकारणविनाशाद् विनाश इत्यपरे। एवं यदा करुणानिधानेश्वरस्य सिसृक्षावशाद् जीवादृष्ट-सहकृतपरमाणौ क्रिया ततः परमाण्वाकाशविभागः। ततः पूर्वसंयोगनाशस्ततो द्व्यणुकारम्भकसंयोगस्ततो द्व्यणुकोत्पत्तिः, ततस्त्र्यणुकोत्पत्तिरिति। एवं क्रमेण महती[2] पृथिवी महज्जलं महत्तेजः महान्वायुरित्यादिक्रमेण ब्रह्माण्डान्तोत्पत्तिरिति।

१. रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। कालादावतिव्याप्तिवारणाय स्पर्शवत्त्वपदं, पृथिव्यादावतिव्याप्तिवारणाय रूपरहितत्वपदम्।
२. क.ख. उभयोः महती पृथिवीति पाठो नोपलभ्यते।

शब्दगुणमाकाशम्, शब्दग्राहकमिन्द्रियं तु कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्। कालो दिग्विपरीतपरत्वापरत्वानुमेयः। कालकृतपरत्वापरत्वयोर्दिग्विपरीतत्वमेवं सन्निहिते वृद्धे दिक्कृतापरत्वयोग्ये कालकृतं परत्वं प्रतीयते। एवं विप्रकृष्टयूनि दिक्कृतपरत्वयोग्ये कालकृतमपरत्वं प्रतीयत इति सङ्क्षेपः। प्राच्यादिव्यवहारकारणं दिक्। सुखादिसमवायिकारणमात्मा। स चाहं सुखीत्यादिप्रतीत्या प्रत्यक्षसिद्धः। निस्पर्शमणु मन इति।

अथ गुणा[1] उच्यन्ते। ते च रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोग-विभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतु-र्विंशतिरेव। अत्र गुणत्वजातिमान् गुणः। न च गुणादीनां निर्गुणत्वात्कथं चतुर्विंशतिसंख्या प्रोक्तेति वाच्यम्, एकार्थसमवायप्रत्यासत्त्या सामान्ये सदिति प्रत्ययेन सत्तावद् अत्रापि संख्याया स्वीकारात्। चक्षुर्ग्राह्यो विशेषगुणो रूपं, तच्च शुक्लनीलपीतरक्तकृष्णकपिलचित्रभेदात् सप्तविधम्। तच्च सप्तविधमपि रूपं पृथिव्यामेव। अभास्वरं शुक्लं जले, शुक्लभास्वरं तेजसि। रसनग्राह्यो गुणो रसः। स च मधुरकटुकतिक्ताम्ललवणकषायभेदात् षड्विधः। षड्विधोऽपि रसः पृथिव्यामेव, जले तु मधुर एव। चित्ररसोऽपि स्वीकार्यः मधुरकटुकपरमाण्वारब्ध-द्व्यणुकादिक्रमेणारब्धावयविनोनीरसत्वे रसप्रत्यक्षं न स्यादिति सङ्क्षेपः।

घ्राण[2]ग्राह्यो गुणो गन्धः। स च द्विविधः—सुरभिरसुरभिश्च, पृथिवीमात्रवृत्तिः। त्वगिन्द्रियग्राह्यो विशेषगुणः स्पर्शः। स च पृथिवीजलतेजोवायुवृत्तिः। रूपादिचतुष्टयं पाकजं पृथिव्यामेव। जलादावपाकजमिति। एवं रूपादिस्पर्शान्तमुद्भूतं सत् प्रत्यक्षम्। अनुद्भूतमप्रत्यक्षम्। उद्भूतत्वं न जातिः, शुक्लत्वादिना सङ्करप्रसङ्गात्; किन्तु अनुद्भूतत्वरूपं जात्यभावः। परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशो जातिसङ्करः। एकत्वादिव्यवहारहेतुः संख्या। सा च द्विविधा—नित्याऽनित्या च। तत्रैकत्वं नित्यगतं नित्यमनित्यगतमनित्यम्। द्वित्वादिकं नित्यानित्यगत-मपेक्षाबुद्धिजन्यं सर्वत्रानित्यमेव। मानव्यवहारासाधारणं कारणं परिमाणम्। तच्चतुर्विधम्—अणु महद् दीर्घं ह्रस्वञ्चेति। पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम्। संयुक्तव्यवहारहेतुः संयोगः। स त्रिविधः—एकतरकर्मजः, उभयतरकर्मजः, संयोगजसंयोगश्चेति। एकतरकर्मजो यथा पक्षिपर्वतयोः संयोगः। उभयतरकर्मजो यथा मल्लमेषयोः संयोगः। संयोगजसंयोगो यथा हस्ततरुसंयोगात् कायतरुसंयोगः। विभक्तप्रत्ययहेतुर्विभागः। स च संयोगवत्त्रिविधः।

---

१. ख. कर्मभिन्नत्वे सति निर्गुणत्वे सति द्रव्याश्रयत्वं गुणस्य लक्षणमिति।

२. घ्राणग्राह्यत्वे सति गुणत्वं गन्धस्य लक्षणम्। रूपादावतिव्याप्तिवारणाय घ्राणग्राह्यत्वमिति। गन्धत्वादावतिव्याप्तिवारणाय गुणत्वपदमिति।

परापरव्यवहारकारणे परत्वापरत्वे, ते तु द्विविधे कालकृतदिक्कृते च। कालकृतं परत्वं ज्येष्ठे, अपरत्वं कनिष्ठे। दूरस्थे दिक्कृतं परत्वं सन्निहिते दिक्कृतमपरत्वम्।

आद्यपतनासमवायिकारणं गुरुत्वम्। तच्च चक्षुःसंयुक्तसमवाये सत्यपि न प्रत्यक्षं तस्यातीन्द्रियत्वम्। आद्यस्यन्दनासमवायिकारणं द्रवत्वम्। तच्च द्विविधम्—सांसिद्धिकं नैमित्तिकञ्चेति। तत्र सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादौ तेजसि सुवर्णादौ। स्नेहत्वजातिमान् स्नेहः। जलमात्रवृत्तिः। घृतादौ चिक्कणता तु तदन्तर्वर्त्तिजलगतस्नेहादेव।

[1]शब्दत्वजातिमान् शब्दः। आकाशविशेषगुणो वा शब्दः। स द्विविधः—ध्वन्यात्मको वर्णात्मकश्चेति। तत्र ध्वन्यात्मको भेर्यादौ, वर्णात्मकस्ताल्वोष्ठपुटव्यापारजन्यः संस्कृतभाषादौ। अर्थप्रकाशो बुद्धिः। सा च स्मृत्यनुभवभेदाद् द्विविधा। तत्र संस्कारमात्रजन्यं ज्ञानं स्मृतिः। अनुभवश्चतुर्विधः। प्रत्यक्षानुमित्युपमितिशाब्दभेदात्। तत्र षड्विधमपि प्रत्यक्षं द्विविधम्, सविकल्पकनिर्विकल्पकभेदात्। निरूपितमेतदनुपदमिति। सुखत्वजातिमत् सुखम्। तद् द्विविधमैहिकं पारलौकिकञ्च। ऐहिकं स्त्रीपुत्रपौत्रादिजन्यम्। पारलौकिकं स्वर्गादिः। उभयमपि धर्मजन्यम्। तच्चानुकूलं सर्वेषाम्। [2]दुःखत्वजातिमद्दुःखम्। तदपि द्विविधम्—ऐहिकं पुत्रादिशोकजन्यम्, अन्यं यमलोकादियातनाजन्यम्। तच्च सर्वेषां प्रतिकूलवत्त्वाच्चाधर्मजन्यम्। इच्छात्वजातिमतीच्छा। सा द्विविधा—उपायेच्छा फलेच्छा चेति। उपायेच्छां प्रति फलेच्छा कारणमिति। अन्येच्छानधीनेच्छाविषयत्वं फलत्वम्। द्वेषत्वजातिमान् द्वेषः। द्वेषः क्रोधः। प्रयत्नत्वजातिमान् प्रयत्नः। स त्रिविधः, प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात्। प्रवृत्तिस्तु धर्माधर्मजनिका क्रिया। तस्या इष्टसाधनताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं कृतिसाध्यताज्ञानञ्च कारणम्। निवृत्तिं प्रति इष्टसाधनताज्ञानं द्वेषश्च कारणम्। जीवनयोनिप्रयत्नस्त्वतीन्द्रियः। स च जीवनान्यथानुपपत्त्या कल्प्यत इति यावज्जीवनमस्ति अधिकश्वासोच्छ्वासादिरूपशरीरसञ्चारस्तु प्रयत्नं विना न सम्भवति। तेन तदनुमानमिति। विहितकर्मजन्यो धर्मः। स च भोगात् कर्मनाशादिजलस्य स्पर्शात् कीर्तनाद् वा नाश्यः, धर्मः क्षरति कीर्तनादिति वचनाच्चेति सङ्क्षेपः। अधर्मो निषिद्धकर्मजन्यः। स च दुःखोत्पादकः, नरकजनकश्चेति सोऽपि प्रायश्चित्तादिनाश्यः।

---

१. वैशेषिकसूत्रोपस्कारेण शङ्करमिश्रेण शब्दः द्रव्यमिति मतमुपस्थाप्य तत्खण्डितम्। श्रोत्रग्रहणयोग्योऽर्थः शब्द इति। अर्थात् श्रोत्रेन्द्रियमात्रग्राह्यत्वे गुणत्वं शब्दस्य लक्षणम्। आकाशस्य विशेषगुणत्वं वा शब्दस्य लक्षणम्।

२. प्रतिकूलवेदनीयं दुःखम्। यथा एका एव नारी पुत्रादीनां कृते अनुकूलवेदनीयत्वात् सुखस्वरूपा, संन्यासिनां कृते प्रतिकूलवेदनीयत्वाद् दुःखस्वरूपा विद्यते।

अथ धर्माधर्मयोर्भोगादिनाश्यत्वात् तत्त्वज्ञानिनः कथं न भोगः। अत्रोच्यते—प्रारब्धेतरकर्मणां ज्ञाननाश्यत्वाभ्युपगमात्। प्रारब्धं तु शरीरारम्भकं कर्म, तत्तु भोगनाश्यम्। अत एव—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।। इति।

प्रारब्धेतरकर्म तु ज्ञाननाश्यमत एव—

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।। इति।

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ।। इति च साधु सङ्गच्छते।

संस्कारस्त्रिविधः, वेगभावनास्थितिस्थापकभेदात्। वेगाख्यसंस्कारो द्विविधः—कर्मजो वेगजश्च। वेगः पृथिव्यप्तेजोवायुमनोवृत्तिः। यत्र नोदनजनितकर्मणा वेगो जन्यते स कर्मजः। यत्र तु वेगवतावयवेन अवयविनि वेगो जन्यते स वेगजवेगः। स्थितिस्थापकस्तु कुण्डलितपत्रादीनां मोचने सति पूर्वावस्था स्थितिस्थापकजन्या। भावनाख्यसंस्कारस्तु आत्मनिष्ठः, स च स्मृतिं प्रति कारणमिति।

कर्मत्वजातिमत्कर्म[1] तच्चोत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि। एवकारो भ्रमणादीनां कर्माधिक्यव्यवच्छेदार्थः। भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनानां गमनान्तर्भावादिति नाधिक्यम्।

नित्यत्वे सति अनेकसमवेतं सामान्यम्। तत्सामान्यं त्रिविधम्—परमपरं परापरञ्चेति। परं सत्ता, अपरं घटत्वादिकम्, परापरं द्रव्यत्वपृथिवीत्वादिकमिति।

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव। नित्यद्रव्याणां सदृशानां जलपरमाणूनां मुक्तात्मनाञ्च परस्परं भेदबुद्धिजनका विशेषाः। ते पुनः स्वत एव स्वस्वरूपभेदबुद्धिजनकाः। अत्र शिरोमणयः—यथा स्वस्वरूपभेदजनका विशेषास्तथा परमाणवोऽपि स्वस्वरूपभेदबुद्धिजनका इति किमर्थमतिरिक्तपदार्थान्तरकल्पनयेत्याहुः।

अयुतसिद्धानामाधाराधेयभूतानामिहेति[2] प्रत्ययहेतुः सम्बन्धः समवायः। तत्प्रमाणं तु रूपवानिति विशिष्टबुद्धिविशेषणविशेष्यसम्बन्धविषयकविशिष्टबुद्धित्वाद् दण्डीति विशिष्टबुद्धिवद् इत्यनुमानमभ्युपेयम्। स चैको नित्यश्च। न च तस्यैकत्वे वायौ रूपसमवायसत्त्वाद् वायौ रूपवत्ताप्रतीतिः स्यादिति वाच्यम्,

१. गुणभिन्नत्वे सति कर्मानाश्रयत्वे सति समवायसम्बन्धेन द्रव्यवृत्तित्वं कर्मणः लक्षणम्।

२. ययोर्द्वयोर्मध्ये एकमविनश्यद् अपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। यथा घटकपालौ, पटतन्तू इति। नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्।

रूपाभावादेव तत्प्रतीतेरभावात्। जले स्नेहसमवायो न गन्धसमवाय इत्यादि-प्रतीतिरेव। समवायस्य नानात्वे प्रमाणमिति समवायत्वं त्वखण्डोपाधिरिति शिरोमणिचरणाः। पदार्थान्तराघटितत्वे सति जातिभिन्नधर्मत्वमखण्डोपाधित्वम्। समवायत्वं नित्यसम्बन्धत्वमिति प्राञ्चः।

अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम्। स चाभावो द्विविधः, संसर्गाभावा-न्योन्याभावभेदात्। तत्र संसर्गाभावस्त्रिविधः, प्रागभावप्रध्वंसाभावात्यन्ताभावभेदात्। तत्रानादिः सान्तः प्रागभावः। सादिरनन्तः प्रध्वंसः। नित्यसंसर्गाभावोऽत्यन्ताभावः। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभावः। अत्रायमर्थः—संयोग-सम्बन्धेन घटवति भूतले समवायसम्बन्धेन घटवति कपाले च घटान्योन्याभावस्य सत्त्वात्। तादात्म्यसम्बन्धेन घटवति घटान्योन्याभावस्यासत्त्वात्। तादात्म्यसम्बन्ध एवान्योन्याभावस्य प्रतियोगितावच्छेदकसम्बन्ध इति। पटादौ च घटतादात्म्याभावात् पटादौ च पटतादात्म्याभावादन्योन्याभावसत्त्वादिति सङ्क्षेपः। बुद्धिरुपलब्धिर्ज्ञानमिति पर्यायः। सा च बुद्धिः प्राग्व्याख्याता। अन्तरिन्द्रियं मनः, प्रवृत्तिर्यागादिक्रिया सा जगद्व्यवहारहेतुः। दोषो रागद्वेषमोहादिः। राग इच्छा प्रीतिरिति यावत्। द्वेषो मन्युःशब्देन क्रोधो मोहो मिथ्याज्ञानं मृतस्य पुनरुत्पत्तिः प्रेत्यभावः इति प्राञ्चः। ज्ञातस्य हि ध्रुवो मृत्युरिति भगवद्वाक्याद् भूत्वा प्रैतीत्यर्थः। प्रेत्यभाव उत्पन्नस्य नाश इति नव्याः। स च पूर्वदेहनिवृत्तिरपूर्वदेहान्तरप्राप्तिरिति यावत्। फलं भोगः सुखदुःखसाक्षात्काररूपः। दुःखं पीडा। अपवर्गो[1] मोक्षः, स चैकविंशतिभेद-भिन्नदुःखस्य ध्वंसः। एकविंशतिदुःखानि तु षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः शरीरं सुखं दुःखं चेति। अत्र सुखस्यापि दुःखसंवलितत्वात् सुखमपि दुःखमेव, मधुविषसम्पृक्तान्नभोजने मध्वपि विषसम्पृक्तत्वाद्विषमेवेतिवत् सुखमपि दुःख-संवलितत्वाद् दुःखमेव। स पुनरपवर्गः कथमुत्पद्यत इति चेत्, अत्रोच्यते—शास्त्रा-दवगतपदार्थतत्त्वस्य विषयदोषदर्शनाद् वैराग्ययुक्तस्य ध्यानासक्तस्य मोक्षार्थिनो ध्यानपरिपाकवशादेव सकलक्लेशहीनस्य निष्कामकर्मानुष्ठानाद् धर्माधर्माननुत्पाद-यतः पूर्वोपात्तधर्माधर्मान् योगाभ्यासवशाद् विदित्वा तत्तद्भोगयोग्यकायव्यूहं विधाय तत्तद्भोगं भुञ्जानस्य प्रारब्धकर्मजन्यशरीरनाशे सति एकविंशतिदुःखात्यन्तिक-दुःखध्वंसो भवति। स एव मोक्ष इति प्राञ्चः।

नव्यास्तु आत्यन्तिकदुःखध्वंसो मोक्षः। आत्यन्तिकत्वं[2] स्वसमानाधिकरण-दुःखप्रागभावासमानकालीनत्वम्। तथा च दुःखप्रागभावासमानकालीनं यद्दुःखं तस्य

१. ख. दुःखात्यन्तिकनिवृत्तिर्मोक्षः।
२. ख. अत्रात्यन्तिकत्वमिति पाठः।

ध्वंसो मोक्षः। आधुनिकदुःखध्वंसेऽतिव्याप्तिवारणाय दुःखप्रागभावासमानकालीनेति दुःखविशेषणं न तु दुःखध्वंसविशेषणम्। तेन चरमदुःखप्रागभावासमानकालीनोपान्त्यदुःखध्वंसे नातिप्रसङ्गः। उपान्त्यदुःखस्य तु चरमदुःखप्रागभावसमानकालीनत्वात्। शुकमुक्तावव्याप्तिवारणाय स्वसमानाधिकरणेति। स्वं दुःखध्वंसः, वा शुकदुःखध्वंसः चरमदुःखं वा तस्यास्मदीयदुःखप्रागभावसमानकालीनत्वेऽपि स्वसमानाधिकरणशुकदुःखप्रागभावासमानकालीनत्वान्न दोषः। स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसो मोक्ष इत्युक्ते सुषुप्तिकालीनदुःखध्वंसेऽतिव्याप्तिः। दुःखप्रागभावस्य दुःखध्वंससमानकालीनत्वान्न दोषः। परे त्वविद्यानिवृत्तिर्मोक्षः। तदर्थस्तु तत्त्वज्ञानादविद्यानिवृत्तौ जातायां रागद्वेषादिदोषनाशः, दोषनाशे प्रवृत्तिनाशः, प्रवृत्तिनाशे जन्मनाशः, जन्मनाशे दुःखनाशः, दुःखनाश एव मोक्षः। तथा च न्यायसूत्रम्—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायात्तदनन्तरापायादपवर्गः। अत्र मिथ्याज्ञानशब्देनाविद्या सूत्रार्थस्तूक्तप्राय इति प्रमेयं व्याख्यातम्।

एकस्मिन् धर्मिणि विरुद्धानेककोटिकं ज्ञानं संशयः। स त्रिविधः। एको विशेषदर्शनाभावे सति समानधर्मदर्शनजन्यः। स्थाणुर्वा पुरुषो वेति। द्वितीयस्तु विशेषदर्शनाभावे सति विप्रतिपत्तिजन्यः। यथानेकचिच्छब्दो नित्य इत्युक्तम्, परेणोक्तमनित्यमिति विप्रतिपत्तौ जातायां मध्यस्थस्य शब्दो नित्यो न वेति संशयः। तृतीयस्त्वसाधारणधर्मजन्यो यथा नित्यादाकाशादेर्व्यावृत्तेन पुनरनित्याज्जलादेर्व्यावृत्तेन गन्धवत्त्वेन विशेषदर्शनाभावे सति किमियं भूर्नित्या उतानित्येति च संशय इति यमुद्दिश्य पुरुषः प्रवर्तते तत्प्रयोजनम्। तच्च सुखं दुःखाभावो वा..... तदर्था हि सर्वेषां प्रवृत्तिः। वादिप्रतिवादिनोर्निश्चयविषयो दृष्टान्तः[१]। यथा—यत्र वह्न्यभावस्तत्र धूमाभाव इति, यथा ह्रद इति। प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः। स चतुर्विधः—सर्वतन्त्रसिद्धान्तः, प्रतितन्त्रसिद्धान्तः, अधिकरणसिद्धान्तः, अभ्युपगमसिद्धान्तश्चेति। तत्र सर्वतन्त्रसिद्धान्तो यथा धर्मिमात्रसद्भाव इदमंशे वर्तमानत्वम्, सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति सर्वशास्त्रकाराणां सिद्धान्त इत्यर्थः। प्रतितन्त्रसिद्धान्तो यथा नैयायिकस्य मन इन्द्रियं तत्समानतन्त्रे वैशेषिके सिद्धम्। अधिकरणसिद्धान्तो यथा क्षित्यादिकर्तृत्वेनेश्वरसिद्धौ तस्य सर्वज्ञत्वसिद्धिः। अभ्युपगमसिद्धान्तो यथा नैयायिकानां शब्दस्य नित्यानित्यविचारे

---

१. ख. वादिप्रतिवादिनोर्निश्चयविषयो दृष्टान्तः। स च द्विविधः, अन्वयव्यतिरेकिदृष्टान्तभेदात्। अन्वयदृष्टान्तो यथा यत्र धूमस्तत्र वह्निः, यथा महानस इति। व्यतिरेकदृष्टान्तो यथा यत्र वह्न्यभावस्तत्र धूमाभाव इति, यथा ह्रद इति।

भवतु तावच्छब्दो गुण इति। अनुमानवाक्यैकदेशावयवाः। ते च प्रतिज्ञादयः पञ्च। तथा च न्यायसूत्रम्—"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। तत्र साध्यविशिष्ट-पक्षप्रतिपादकं वचनं प्रतिज्ञा, यथा पर्वतो वह्निमानिति। पञ्चम्यन्ततृतीयान्तहेतुप्रति-पादकं वचनं हेतुः। यथा धूमादिति धूमेन वा। सव्याप्तिकं दृष्टान्तवचनमुदाहरणम्। यथा यो यो धूमवान् सोऽग्निमान् यथा महानस इति। पक्षे व्याप्तिविशिष्टहेतूपसंहार उपनयः। यथा वह्निव्याप्यधूमवानयमिति। पक्षे साध्योपसंहारो निगमनम्। यथा तस्माद् वह्निव्याप्यधूमवत्त्वाद् वह्निमानिति। तस्मात्तथेति वा। अत्रावयवशब्देनावयवा इवावयवाः, न त्वनुमानवाक्यस्य समवायिकारणम्। अनुमानवाक्यस्य शब्दात्मक-त्वेनाकाशसमवेतत्वात्। व्याप्यारोपेण व्यापकारोपस्तर्कः, अनिष्टप्रसञ्जनं वा तर्कः। अस्यायमर्थः—यद्ययं पर्वतो निर्वह्निः स्यात् तदा निर्धूमोऽपि स्यादिति धूमाभावव्याप्यवह्न्यभावारोपेण धूमाभावारोप इत्यनिष्टप्रसञ्जनमपि। इत्थं चायं तर्कोऽनुमानानुग्राहकः, निर्णयो निश्चयात्मकं ज्ञानम्। तच्च प्रमाणानां फलम्। तत्त्वबुभुत्सोः कथा वादः। स चाष्टनिग्रहस्थानानामधिकरणम्। ते च न्यूनाधिकाप-सिद्धान्तहेत्वाभासाश्च पञ्चेति[1] निग्रहाः। उभयसाधनवती विजिगीषोः कथा जल्पः। परपक्षे दूषिते सति स्वपक्षसाधनावसानो वा जल्पः। असौ सर्वनिग्रहस्थानामधि-करणम्। स्वपक्षस्थापनाहीनापरपक्षदूषणावसाना कथा वितण्डा। पूर्वपक्षसिद्धान्तप्रति-पादकवाक्यसमूहः कथा। ये तु पक्षधर्मत्वादिरूपाणामेकेनापि रूपेण हीना हेतुवदाभासमानास्ते हेत्वाभासास्ते तूक्ताः। अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरेण दूषणाभिधानं वाक्छलम्, तथा हि नवकम्बलोऽयं देवदत्त इति नूतनाभिप्रायेण प्रयुक्तस्य नवशब्दस्यार्थान्तरेण वाक्यं कश्चिद् दूषयति। नास्य नवकम्बलाः सन्ति, दरिद्रत्वात्, एकोऽप्यस्य दुर्लभः कुतो नवकम्बला इति छलवादितया पराजीयते। असदुत्तरं जातिः। पराजयकारणं निग्रहस्थानम्। तच्च न्यूनाधिकमपसिद्धान्तार्थान्तरविरोधमतानुज्ञाप्रतिभादिभेदेनानन्तविधमपि विस्तरभिया न लिख्यते। स्वपक्षे दोषमनुद्धृत्य परपक्षे दूषणाभिधानं मतानुज्ञा। उत्तरस्या-प्रतिपत्तिरप्रतिभा। अत्रेदं प्रतिभाति यल्लक्षणमपि केवलव्यतिरेकिहेतुर्विशेषः। तत्र लक्षणेऽतिव्याप्त्यव्याप्त्यसम्भवादयो दोषाः सन्ति। तेऽपि हेत्वाभासादि-रूपत्वान्निग्रहस्थानेऽन्तर्भवन्ति। तथा हि अतिव्याप्तेर्दूषकताबीजं व्याप्यत्वासिद्धः। यथा गोर्लक्षणं पशुत्वं, तत्र गोत्वनिरूपिता व्याप्तिः पशुत्वे सिद्धेति पशुत्वं व्याप्यत्वासिद्धम्। सोपाधिकञ्चेति[2] सास्नाशृङ्गत्वोपाधेः सत्त्वात्। अव्याप्तेर्दूषकताबीजं

१. ख. पञ्च वेति।
२. ख. सोपाधिकञ्चेति तत्रेति पाठः।

भागासिद्धिः। सा च भागे हेतोरसिद्धः। यथा गोर्लक्षणं कपिलत्वम्, तच्चान्यगवि नास्ति। लक्ष्यैकदेशे लक्षणागमनमव्याप्तिरित्यव्याप्तेर्लक्षणमित्युक्तत्वात्। एवं लक्ष्ये [1]क्वाप्यवर्तमानमसम्भवः। सोऽपि स्वरूपासिद्धः। यथा गोर्लक्षणमेकखुरत्वमिति। तच्च कुत्रापि गवि नास्ति। एवमन्यान्यपि निग्रहस्थानानि बहूनि सन्ति, तथापि विस्तरभयान्न प्रदर्शितान्येतावतैव व्युत्पित्सोर्व्युत्पत्तिसम्भवादिति।

तैजपायसगोत्रेण श्रीमद्गोपालसूनुना।
हरिरायपण्डितेन निर्मिता तर्कचन्द्रिका ।।
वेदबाणमुनीन्द्वब्दे शुक्लभाद्रस्य सप्तमी।
अस्यां हरिरायेण निर्मिता तर्कचन्द्रिका ।। इति।

**।। इति श्रीमत्पण्ड्यागोपालजीपुत्रेण, श्रीमत्पण्ड्याभगवतीदासकनिष्ठेन, श्रीपण्ड्याश्रीपतेर्ज्येष्ठेन श्रीहरिरायेण विरचिता तर्कचन्द्रिका ।।१।।**



१. ख. क्वाप्यवर्तनमसम्भवः।

# सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **वेदान्तपरिभाषा** : वेदान्तविषयकोऽयं वादग्रन्थः श्रीमद्धर्मराजाध्वरीन्द्रप्रणीतो रामकृष्णाध्वरिकृत'**शिख मणि**'टीकया, स्वामिश्रीमदमरदासप्रणीत'**मणिप्रभा**'टीकया चोपेतः प्रो.पारसनाथद्विवेदिमहोदय टिप्पण्यादिभिः, भूमिकया, अनुसन्धानात्मकपरिशिष्टैश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.०

२. **गाथासप्तशती (गाहासत्तसई)** : ग्रन्थोऽयं हालोपनामकमहाकविश्रीसातवाहनसङ्कलितः, भट्टश्रीमथुरानाथशर्मकृतया प्राकृतगाथासप्तशत्याश्छायारूपया **संस्कृतगाथासप्तशत्या, व्यङ्ग्यसर्वङ्कषाख्यव्याख्य**या च विभूषितः सुसम्पाद्य प्रकाशितः— ४००.००

३. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां** श्रीमत्त्रिलोचनदासकृतया '**कातन्त्रवृत्तिपञ्जिका**' टीकया कविराजसुषेणशर्मकृतया '**कलापचन्द्र**'-टीकया, अथ च डॉ.जानकीप्रसादद्विवेदिकृतया **समीक्षया**, विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः—
प्रथमो भागः ३५०.००
द्वितीयो भागः खण्डम्-१ ५००.००
द्वितीयो भागः खण्डम्-२ ६००.००

४. **सर्वानन्दकरणम्** : ज्योतिषशास्त्रस्य महनीयोऽयं ग्रन्थः पण्डितश्रीगोविन्द-आप्टेमहोदयेन विरचितः स्वोपज्ञव्याख्यया विभूषितश्च सुसम्पाद्य प्रकाशितः— १२०.००

५. **बृहदारण्यकवार्तिकसारः** : श्रीमद्विद्यारण्यस्वामिविरचितो वेदान्तशास्त्रीयोऽयं ग्रन्थो म.म.पण्डित-श्रीहरिहरकृपालुद्विवेदिविरचितेन हिन्दीभाषानुवादेन समलङ्कृत्य प्रकाशितः—
प्रथमो भागः २५०.००, द्वितीयो भागः २५०.००
तृतीयो भागः २४०.००, चतुर्थो भागः २७०.००

६. **रसगङ्गाधरः** : साहित्यशास्त्रीयोऽयं प्रौढो ग्रन्थः पण्डितराजजगन्नाथप्रणीतः श्रीनागेशभट्टकृतया '**गुरुमर्मप्रकाश**'व्याख्ययोपेतः सुसम्पाद्य प्रकाशितः—
प्रथमो भागः १८०.००
द्वितीयो भागः ४८०.००

७. **पाश्चात्त्य-भारतीयराजनीत्योः समालोचनम्** : पण्डितराजश्रीराजेश्वरशास्त्रिव्याख्यानभूतः समालोचनात्मकोऽयं ग्रन्थः सुसम्पाद्य प्रकाशितः—
भाग-१ ५००.००
भाग-२ ५५०.००

८. **मानवनीतिविवेचनम्** : प्रो.राधेश्यामधरद्विवेदिमहोदयेन प्रणीतो भारतीयसमाजनीतिमानवनीत्योश्च विश्लेषणात्मकोऽनुसन्धानात्मकोऽयं ग्रन्थः सम्यग्रूपेण सम्पाद्य प्रकाशितः— २८०.००

९. **भास्करी (द्वितीयं संस्करणम्)** : शैवदर्शनस्य महनीयोऽयं ग्रन्थः श्रीमदुत्पलाचार्यप्रणीतया **ईश्वर-प्रत्यभिज्ञाकारिकयोपेतः** श्रीमदाचार्याभिनवगुप्तविरचित'**विमर्शिन्या**'ख्यटीकया विभूषितः, तट्टीकाभूत-**भास्करीव्याख्यया** समलङ्कृत्य सम्पाद्य च प्रकाशितः—
प्रथमो भागः १५०.००
द्वितीयो भागः १५०.००
तृतीयो भागः १८०.००

१०. **वर्णाश्रम शिक्षा-व्यवस्था तथा आधुनिक युग में उसकी उपयोगिता** : डॉ.सुभाषचन्द्रतिवारिमहोदयेन विरचितः शिक्षाशास्त्रस्यानुसन्धानात्मको विश्लेषणात्मकोऽयं ग्रन्थः सुसम्पाद्य प्रकाशितः— २००.००

११. **संस्कृतकथाकुञ्जः** : अभिनवकथानिगुम्फनपराणां स्वनामधन्यानां कथाकाराणामेकविंशतिसंख्याकाः कथाः सङ्कलय्य पण्डितश्रीशिवजी-उपाध्यायमहोदयैः, डॉ.शिवदत्तशर्मचतुर्वेदिमहाशयैश्च सम्पादितोऽयं ग्रन्थः प्रकाशितः— १३०.००

१२. **भवभूति की काव्यभाषा का शैली (रीति) वैज्ञानिक अध्ययन** : भाषावैज्ञानिकानुसन्धानात्मकोऽयं ग्रन्थः डॉ.व्रजभूषणत्रिपाठिमहोदयेन विरचितः सुसम्पाद्य प्रकाशितः— २६०.००